२०२१

# आषाढस्य प्रथमदिवसे

## महाकविकालिदासविशेषाङ्कः

प्रथमं वर्षम् ।




**www.vruttavallari.com**

---

प्रकाशन



आषाढस्य प्रथमदिवसे स्मर्यते कालिदासः ।
साहित्यर्तावनुपमसुमं यस्य गन्धो मनोज्ञः ॥
यत्साहित्यं, कुसुमकिसलाः विश्वमामोदयन् ये ।
तं वन्देऽहं कविकुलगुरुं शारदायाः सुपुत्रम् ॥

रचना - राजेंद्र भावे - प्रातिभेयः

# आषाढस्य प्रथमदिवसे

## *महाकविकालिदासविशेषाङ्क:*

**प्रथमं वर्षम् । २०२१**



**© प्रकाशक**
www.vruttavallari.com

**संपादक**
श्रावणी माईणकर

**मुखपृष्ठ चित्र**
डॉ. स्वाती भाटवडेकर

**मलपृष्ठ चित्र**
राधिका पराष्टेकर

**मलपृष्ठ भैरवी**
वैशाली चौथाई-आठवले

**अक्षरजुळणी आणि सजावट**
वर्षा बापट
डिझाईन मॅग्नेट, मुंबई. ९८२१६९६०९८



श्रावणी माईणकर

## संवादकीय

आज ११ जुलै २०२१ - आषाढ शुद्ध प्रतिपदा - अर्थात महाकवी कालिदास दिन. आजच्या दिवशी वृत्तवल्लरीच्या Online महाकविकालिदास विशेषांकाचे प्रकाशन डॉ. गौरी माहुलीकर यांच्या हस्ते होत आहे. आजचा दिवस आमच्यासाठी कसा आहे ? ज्ञानेश्वरमाऊलींच्या शब्दात सांगायचे झाले तर...
"अजि सोनियाचा दिनु, वर्षे अमृताचा घनु" असा आहे.
मागच्या वर्षीच्या पावसाळ्यात माझ्याकडे वृत्तवल्लरीची जबाबदारी आली. संपूर्णपणे संस्कृत भाषेला वाहिलेले असे हे संकेतस्थळ. माझ्या हातात येईपर्यंत डॉ.अतुल ठाकुर यांनी सातत्याने केलेल्या प्रयत्नांमुळे या संकेतस्थळाला एक विशेष दर्जा प्राप्त झाला होताच. संस्कृतमधील अनेक मान्यवरांनी लिहिलेल्या लेखांमुळे हे संकेतस्थळ सुशोभित होत होते.
संस्कृतभाषेला वाहिलेले हे संकेतस्थळ आणि म्हणूनच महाकविकालिदास दिनाच्या दिवशी इथे तर उत्सव साजरा व्हायला हवा हा विचार मनात पक्का झाला होता. जर वृत्तवल्लरीचा Online कालिदासविशेषांक काढला तर जगभरातील सर्वच कालिदास प्रेमींना, संस्कृत प्रेमींना ह्या व्यासपीठावर एकत्र आणता येईल ह्या विचाराने त्या निर्णयावर शिक्कामोर्तब झाले. यक्षाला त्याच्या पत्नीला निरोप देण्यासाठी मेघ प्राप्त झाला, पण माझ्याकडे अगदी मेघ नाही तर WhatsApp सारखा दूत तर होताच की ! त्याने त्याचे काम यथायोग्य केले आणि लवकरच येऊ घातलेल्या महाकविकालिदास विशेषांकाची वार्ता आणि आम्ही केलेले आवाहन सर्वदूर पसरलेल्या संस्कृत प्रेमीजनांपर्यंत अतिशय वेगाने जाऊन पोहोचलेसुद्धा! आम्ही केलेल्या या आवाहनाला उत्स्फूर्त प्रतिसाद देत अनेकांनी महाकवी कालिदासांवरचे वैविध्यपूर्ण, अभ्यासपूर्ण लेख, काव्य, चित्र, संगीतमय श्लोक आमच्यापर्यंत शीघ्रगतीने पोचवले. या सर्वच लेखकांचे कवींचे, चित्रकारांचे,

गायकांचे वृत्तवल्लरी परिवारातर्फे मनापासून आभार आणि वृत्तवल्लरी परिवारात मनापासून स्वागत !

डॉ. गौरी माहुलीकर, डॉ. आसावरी बापट ह्या आमच्या गुरू ! महाकविकालिदास विशेषांकाची कल्पना त्यांच्या कानावर घातल्यावर केवळ कौतुकाने पाठ न थोपटता त्यांनी त्यांचे अभ्यासपूर्ण लिखाण देऊन आमच्या कामात प्रत्यक्ष सहभागही दिला. त्याबद्दल त्यांचे मनापासून आभार !

डॉ. गौरी माहुलीकर आम्हाला देवी सरस्वतीप्रमाणेच वंदनीय आणि पूजनीय आहेत. “वृत्तवल्लरीच्या पहिल्या Online महाकविकालिदास विशेषांकाचे प्रकाशन आपल्या हस्ते व्हावे, अशी आमची इच्छा आहे” असे सांगताच क्षणाचाही विलंब न करता अतिशय आनंदाने त्यांनी या विद्यार्थीहट्टाचा स्वीकार केला.

गीर्वाणवाणी शिकण्याकडे तरूणांचा कल वाढत आहे. कालिदासदिनाचे सर्वच माध्यमांनी केलेले उत्स्फूर्त स्वागत, त्या निमित्ताने होणारे वैविध्यपूर्ण कार्यक्रमांचे आयोजन आणि त्याला मिळणारा उत्तम प्रतिसाद हे चित्र सर्वच संस्कृतप्रेमींसाठी अत्यंत आशादायक आहे. वृत्तवल्लरीच्या माध्यमातून आम्ही जे काम करीत आहोत त्याला या सकारात्मक वातावरणाने निश्चितच बळ मिळाले आहे.

यासंबंधी वाचकांकडून येणाऱ्या सूचनांचे, नवनवीन कल्पनांचे स्वागतच आहे.

लोभ आहेच, तो वृद्धिंगत व्हावा.

श्रावणी माईणकर

# अनुक्रमणिका

डॉ. गीता पेंडसे

# महाकविकुलगुरूकालिदासः

उपमाराजितं येन निर्मितं काव्यलीलया।
शृंगारादिरसानां च वैपुल्यं वर्धितं तदा।
कवीनांमंडलाकारे मध्यवर्ती विराजते।
सरस्वतीकंठाभरणं कालिदास नमो स्तु ते।

महाकवेः काव्यप्रेरिताः कवयः जाताः महीतले।
हाराः तैः काव्यमयाः समर्पिताः देव्याः कण्ठे।
कतिपयविबुधाः प्रमुदितजाताः काव्यप्राशने निमज्जने।
विकसितजातं हृ्रुदयं तेषां काव्यानन्दे विमलरसे।
कुशलकवेः काव्यप्रभावः जगति भवति विस्मयजनिते।
लसत्विलासे काव्यकलापे कालिदासकवि विराजते।
गुणीजनानां मनसि स्थित्वा कविवर, यासि स्वर्लोके।
रुचिरवाङ्मयं गीर्वाण्याः हृ्रुद्यं विलसति भूमितले।
कालिदासकृ्रुतकाव्याभरणैः सरस्वति हे, सुशोभिते।
लिखितं काव्यं येन कविना कविकुलराजितजनमध्ये।
दाता जातः भोजराजनृ्रुपः तस्मिन् मणिकांचनयोगे।
सकलजनैरभिवादितकविकुलभूषणः भवति, हे शुध्दमते।

***डॉ. गीता पेंडसे***
*ठाणे*
*geetapendse@rocketmail.com*
*एम.ए., बी.एड्., पीएच् डी,. संस्कृत. मुंबई विद्यापीठ. निवृत्त प्राध्यापिका.*
*वाचन लेखनाची आवड*

**डॉ. सौ. माधवी जोशी**

## हे कालिदास!

यः सः कवियशःप्रार्थी गतोऽनुकरणीयताम्।
यं गत्वा न निवर्तन्ते वागर्थध्वननादयः।।

येन सा दूतकाव्यानां परम्परा विनिर्मिता।
यस्मै कालिसरस्वत्योः वरदानमलौकिकम्।।

यस्मात्सा भारती देवी माधुर्येण प्रसाददा।
यस्य हि रचनाः सर्वाः रसभावसमन्विताः।।

यस्मिन्नवनवोन्मेषाः प्रज्ञाश्च सृजनक्षमाः।
कालिदास नमस्तुभ्यं महाकविप्रबोधक।।

***डॉ. सौ. माधवी दिपक जोशी***
*संस्कृतव्याख्याता,*
*डी. बी. जे. महाविद्यालय, चिपळूण*

*मुंबई विद्यापीठाची पीएच्.डी. पदवी प्राप्त.*
*डी बी जे कॉलेज चिपळूण येथे संस्कृत व्याख्याता.*
*महाराष्ट्र राज्य पाठ्यपुस्तक निर्मिती मंडळात संस्कृत पाठ्यपुस्तक निर्मितीमध्ये सहभागी.*
*संस्कृत भारती तर्फे २ अनुवादित पुस्तके प्रकाशित.*
*संस्कृत भारती कार्यकर्ता.*



श्री. राहुल सातघर

# एकश्लोकी मेघदूत

आदौ रामगिरिवटीषु वसनं,नत्वा दृढं पुष्करं
स्वाधिकारात् प्रमत्तआदिकथनं सन्देशसम्प्रेषणम्।
वारिनिर्वहणं, अवन्तीक्रमणं अलकापुरीप्रापणम्
आगमसुमन्त्रणादिकरणम् एतद्धि मेघदूतम्॥

***श्री. राहुल सातघर***
*sanskritayana@gmail.com*
*संस्कृतायन वाद्यवृंद संस्थापक - मुंबई.*
*संस्कृत अध्यापक, प्रचारक, लेखक, नाटककार, भाषातज्ञ*
*निर्मिती - संस्कृतायन मुम्बापुरी इति।*



रघुवीर रामदासी

# ॥ श्री कालिदासाष्टकम् ॥

कुमारसम्भवं काव्यं रचितं मेघदूतकम्।
कालिदासमहं वन्दे कवीनां कुलदेशिकम् ॥१॥
यस्य सर्वेषु काव्येषु चातुर्यप्रतिभादय: ।
भानोस्तेज इवाभान्ति कालिदासं नमामि तम् ॥२॥
येन विक्रमोर्वशीयं गहनं रघुवंशकम् ।
रचितं लीलया तं वै कालिदासं नमाम्यहम् ॥३॥
निसर्गेतिप्रीतिमन्तं रामटेकसुभूषणम् ।
चरित्रमुत्तमं यस्य कालिदासं नमामि तम् ॥४॥
कालिकाया:प्रसादेन चिरपाण्डित्यमाप्तवान् ।
कालिदासेति' तेनैव विख्यातं तं नमाम्यहम् ॥५॥
उपमा यस्य रुचिरा रसालंकारसंयुतम् ।
काव्यं यो रचयामास कालिदासं नमामि तम् ॥६॥
शाकुन्तलं मनोहरं रचयामास यो मुदा ।
कल्लेश्वरे भक्तिमन्तं कालिदासं नमामि तम् ॥७॥
विद्वद्भि: पूजनीयं च कविं भारतभूषणम् ।
गीर्वाणभारतीपुत्रं कालिदासं नमामि तम् ॥८॥
रामदासीकुलोत्पन्नो रघुवीरेति नामभाक् ।
कालिदासप्रीतिवशाद् कुर्वेऽहं गौरवाष्टकम् ॥९॥
॥ श्री.चन्द्रशेखरकृपया रघुवीर कृतम् कालिदासाष्टकं सम्पूर्णम् ॥

सुदीप जोशी

# मेघदूते प्रकृतिवर्णनम्

मेघ एवं दूतः यस्मिन् तत् इति विग्रहः। मेघदूतमपि कालिदासकृतमपूर्वं खण्डकाव्यमेकमस्ति। मेघदूतम् पूर्वमेघः उत्तरमेघश्चेति। अस्मिन् खण्डकाव्ये मेघप्रवाहव्दारेण राष्ट्रस्य समग्रा भौगोलिकी स्थितिः कालिदासेन प्रदर्शिता वर्तते। परन्तु कविः वस्तुविधानं रुचिपूर्णकाल्पनिकदृष्ट्या करोति। यक्षः कश्चित् कुबेरस्य वर्षभोग्येण शापेन अलकापुरीस्थया प्रियया विरहितः रामगिरेः आश्रमेषु निवसति। तत्र वर्षर्तौ आषाढस्य प्रथमदिवसे नवीन मेघमाकाशे वीक्ष्य दूरस्थितायाः निकटे कुशलसमाचारं प्रापयितुं तमनुरुणध्दि। तस्य मार्गे आगतानां स्थानानां रमणियतमं वर्णनमपि तन्मुखेन दर्शयति कविकुलगुरु कालिदासः। मेघदूते सर्वांनि पद्यानि मन्द्राकान्ताछन्दसा विरचितानि वर्तन्ते। अस्मिन् खण्डकाव्ये नायकः यक्षः नायिका तु तत्पत्नी यक्षिणी। मेघस्तु सन्देशवाहकः। अत्र मुख्यो रसः विप्रलम्भश्रृंगारः। रीतिः वैदर्भी। प्रसादगुणगुम्फिता च रचना। पूर्वमेघभागस्तु विषयवर्णनात्मकः। उत्तरमेघस्तु विरहवर्णनात्मकः।

कुबेरशापेन प्रियाविरहितस्य रामगिरेः आश्रमेषु वसत: यक्षस्य अलकापुर्यां स्थितां स्वप्रियां प्रति मेघद्वारा कुशलवार्ताप्रेषणमेव मुख्यो वर्ण्यविषय:। अनेन विषयमाध्यमेन कालिदास: भारतीयप्रकृतिसुषमां, मेघस्य मार्गमपि दर्शयितुं प्रयतते इति व्यङ्ग्यता विशिष्टरूपेण सन्दृश्यते।

अस्मिन् खण्डकाव्ये कविकुलगुरू कालिदासेन न केवलं प्राकृतिचित्रात्मकवर्णनं कृतम् अपि तु 'रामगिरि पर्वताविद्यमानाश्रमेषु वर्णनं अपि प्रागल्भमत्या कृतम् इति प्रतीयते। अत्र रामगिरि आश्रमस्य क: प्रसङ्ग: ? इति चेत् मेघदूते प्रथमपद्ये एव वर्णितम्। स्वकर्मणि अनवधानवान् कोऽपि यक्षः स्वस्वामिनः यक्षेश्वरस्य कुबेरस्य अभिशापेन स्वनिवासात् अलकापुरीतः नियुक्तः रामगिरेः आश्रमेषु एकस्मै वर्षाय निवासं चकार। तदा एव एतेषां आश्रमाणां जलं जनकनन्दिन्या: सीताया:

वनवासकाले अवगाहनेन पवित्रमभवत्। अत्र माता सीतास्नानप्रसङ्गात् आश्रमाणां पवित्रता प्रतीयते। मेघदूते मेघस्य वर्णनमपि सहृदयल्लायकं वर्तते। महाकवि कालिदासस्य विश्वकवेः कल्पनया एव सम्भवते - कविं वाल्मिकी रामायणे दूत: यः वानरसेनाप्रमुखः हनुमत: प्रेरणां स्यात्। तस्मात् वर्षाकालप्रसङ्गे अर्थात् 'आषाढस्य प्रथमदिवसे' मेघस्य रूपं कथं स्यात् - तस्य विवेचनं

आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं।
विप्रक्रिडापरिणतगजप्रेक्षणीयं ददर्श।।

अस्मिन् पद्यशब्दैः वर्णितम्। स यक्षः तस्मिन् रामगिरौ कतिचिद् मासान् उषित्वा आषाढमासस्य प्रथमदिवसे आलिङ्गितशिखरं विप्रक्रिडायां तिर्यक्प्रहारकारिगजसदृशं रूपं मेघस्य वर्तते। तस्मात् महाकवि कालिदासेन मेघस्य शरीरस्य वर्णनं अत्यन्तं सुक्ष्मतया कृतम्। " धूमज्योतिः सलितमरुतां सन्निपातः क्व मेघ:। " - धूमात् , प्रकाशात्, जलात्, वायोः मेघस्य निर्माणं भवति। प्रसङ्गः यत् - मेघः निर्जीवः। अतः सः सन्देशः कथं प्रापयितुं समर्थः स्यात्? तथापि विरहवशात् एतत् जानन्नपि निर्णेतुमसमर्थ: यक्षः तं मेघं दूतरूपेण प्रेषयितुं कामयते इति कालिदासस्य भावः

अस्मिन् खण्डकाव्ये पर्वतमेघयोर्मध्ये यः सम्बन्धः तस्य प्रकटीकरणं प्रतीयते। एवञ्च पर्वतमेघयोर्मध्ये भगवन्तः श्रीरामस्य भावबन्धनं सन्दृश्यते।

आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं
वन्द्यै: पुसां रघुपतिपदैरङ्कितं मेखलासु।
काले काले भवति भवतो यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम्।।

महाकवि कालिदासेन विलक्षणरित्या उक्तं - लोकानां वन्दनीयैः रामचन्द्रचरणैः चिन्हितम् एतं प्रियमित्रम् उन्नतं रामगिरम् आश्लिष्य तस्य अनुज्ञां गृहाण। समये समये भवतः सम्पर्कं सम्प्राप्य सुखमनुभूयोष्ण बाष्पं त्यजतः यस्य रामगिरेः प्रणयः प्रादुर्भवति। अर्थात तात्पर्यं यत् मेघस्य अवगमनेन सुखमनुभवतोऽपि सम्प्रति गमनेनोत्पन्नं बाष्पं तस्य प्रेमाभिव्यक्तिं व्यनक्ति , अतः तमालिङ्ग्य व्रजतु।
मेघदूते महाकविकालिदासेन प्रकृतिमानवयोः व्यवहारसाम्यं प्रदर्शयन् प्रकृतिं

सजीवां प्रतिपादयति। तस्मात् महाकविकालिदासेन मेघस्य उड्डयनं कथं स्यात्? - उक्तं -

स्थानादस्मात्सरसनिचुलादुत्पतोङ्मुखः खं
दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान्॥

मेघस्य विशालशरीरं विलोक्य मूढाः सिध्दसुन्दर्योऽतिचकिता भविष्यन्ति। तत् आर्द्रस्थलवेतसवेष्टितात् अस्माद् आश्रमात् नभो मार्गे प्रतिरोधकानां दिग्गजानां पीवरशुण्डदण्डाक्रमणानि परित्यजन् अलकापुरीगमनार्थम् उत्तराऽभिमुखः सन् आकाशमुत्पत। अर्थात् मुग्धसिध्दाङ्गानानां नेत्राणाम् आनन्दविषयो भूत्वा उत्तरदिशि अलकापुरीं प्रति गमनाय भवतु इति।

अत्र राजराजेश्वर देवदेवेश्वर महाकाल महादेवस्य सम्बन्धः मेघेन सह कृतं वर्तते इति प्रतीयते। एवं उज्जयिन्याः अपि वर्णनम् अतिशयेन प्राकट्येन कृतम् अस्ति।

भर्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्य।
धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या
स्तोयक्रिडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः॥

अस्मिन् पद्ये यदुज्जिन्यां भगवान् शङ्करस्य निवासस्थलस्य वर्णनं विद्यते। श्यामवर्णयुक्तत्वात् भगवतः शङ्करस्य सदृश एव मेघः भविष्यति। तदा शिवकण्ठवर्णसमशोभायुक्तं शिवगणाः उज्जयिन्यां सादरं द्रक्ष्यन्ति। अत्र महादेवस्य द्वितीयरूपं स्यात् - तद् द्वितीयरूपस्य दर्शनं कर्तुं जनाः सादरं प्रणम्यन्ति इति प्रतीयते। अत्र महादेवः उपमानरूपेण तथा मेघः उपमेयरूपेण सन्दृश्यते। अस्मिन् पद्ये उपमानउपमेयभावसम्बन्धः प्रतीयते। यदि व्याकरणदृष्ट्या चेत् तर्हि विशेषणविशेष्यभावसम्बन्धः स्यात्।

गत्वा चोर्ध्वं दशमुखभूजोच्छ्वासितप्रस्थसन्धेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः।
श्रृङ्गोच्छ्रायै कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्म्बकस्याट्टाहासः॥

अस्मिन् पद्ये यक्षः मेघं कथयति कैलाशशिखरं गत्वा तत्रत्यां शोभां सादरं पश्यतु इति प्रसङ्गः।

क्रौञ्चरन्ध्रपर्वतमतिक्रम्य भवान् कैलासपर्वतस्यातिथिर्भविष्यति। एवं क्रौञ्चरन्ध्रनिर्गमनान्तरम् उर्ध्वं गत्वा रावणबाहुविश्लेषितरसानुसन्धेः देवललनामुकुरभूतस्य कैलाशपर्वतस्य आगन्तुकस्त्वं भवेः इति। सः कैलाशः कैरवनिर्मलाभिः शिखरोन्नतिभिः आकाशं व्याप्य दिने दिने पूञ्जीभूतः त्रिलोचनस्यातिहासः इव विद्यमानोऽस्ति। महाकविकालिदासः महाकाल शिवस्य भक्तः आसीत् । महाकविकालिदासेन शिवं नतिपूर्वकं नत्वा यक्षमेघयोर्मध्ये शिवं प्रति सुसंवादः प्रतीयते। यक्षः मेघं प्रति भणति यत् तत्र गमने दर्शने च शिवस्य गुणान् त्वमाप्स्यसि। तत्र कस्मिश्चित् पाषाणे प्रकटं योगिभिर्नित्यमम् कृतपूजं शिवस्य चरणन्यासं भक्तिपूर्वकं प्रदक्षिणां करोतु । दर्शनात् निष्कल्मषाः सन्तो भक्तिमन्तो जनाः शरीरत्यागानन्तरं परमं सत्य प्रमथपदं लभन्ते। तत्सदृशं भवान् तत्र गत्वा भगवतो भूतभावनस्य शिवस्य गुणयुक्तः सन् परमपदं लभेयाः। अत्र शिवस्योदात्तगुणानां वर्णनं प्रतीयते। एवं क्रौञ्चरन्ध्रपर्वतमतिक्रम्य भवान् कैलाशपर्वतं यास्यति स च भगवतो शङ्करस्य अट्टाहासो इति भावः।

तत्पश्चात् कैलाशपर्वतवत् आम्रकुटपर्वतस्य वर्णनं मानवीयदृष्ट्या विलक्षण वर्तते। तत्पद्यं विद्यते -

छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रै -
स्त्वय्यारूढे शिखरमचलः स्निग्धवेणीसवर्णे।
नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां
मध्ये श्यामः स्तन इव भूवः शेषविस्तारपाण्डुः॥

अयं आम्रकुटपर्वतः पक्वैः आम्रफलैः आम्रवृक्षैः च आच्छादितोऽस्ति। वृक्षाणां पिताम्रैः स पर्वतः परितो वेष्टितो विद्यते। यदा रमणीयवेणीरूपतां प्राप्तः सन् तत् शिखरम् आरूढो भविष्यति। मेघः तदा सर्वत्र पीतवर्णत्वात् मध्ये च मेघावगमने सति श्यामवर्णयुक्तत्वात् तस्य आम्रकुटपर्वतस्य रूपं पृथिवीनायिकायाः स्तन इव दृश्यते इति अस्य शोभायमानवर्णनमत्र विलासते। अत्रापि उपमानउपमेयभावसम्बन्धः प्रतीयते।

कालिदासस्य काव्येषु इतरकविकाव्यापेक्षया निरूपमं विद्यते। अस्मिन् खण्डकाव्ये

गिरि- सागर- नदी- सरोवर- वन- सुर्य- चन्द्र - रात्रि - दिवस- वनस्पति - लता- पशु पक्षाप्रभृतीनां प्रकृतिगतानां वस्तूनां हृदयावर्जकं चित्रं वर्णितं विद्यते। महाकविकालिदासवर्णितायाः प्रकृतेः इदं वैशिष्ट्यं यत् क्वापि प्रकृतिगतं वस्तु देवत्वं, मानवीयभावं च अनुसन्दधाति।

***सुदीप संजय जोशी***
*sudipsj2001@gmail.com*
*शास्त्री व्दितीय वर्ष (व्याकरण विभाग)*
*केन्द्रीयसंस्कृतविश्र्वविद्यालय,*
*क. जे. सोमैया संस्कृत विद्यापीठ, विद्याविहार मुंबई.*

सौ. मेघा देशपांडे

# कविकुलगुरुः कालिदासः

पुरा कवीनां गणना प्रसंगे कनिष्ठिकाधिष्ठित कालिदासः।
अद्यापि तत्तुल्य कवेरभावादनामिका सार्थवती बभूव॥

यशस्विनां कवीनां कुलगुरुः महाकविः कालिदासः 'कविशिरोमणिः' इति पदेन अद्यापि विभूषितः। संस्कृतसाहित्ये सर्वेषु कविषु रसिकप्रियः कवि कालिदासः। कालिदेव्याः प्रसादेन एषः काव्यप्रतिभां लब्धवान् इति किंवदन्ति प्रचलति। तस्मात् कालिदासः इति तस्य नाम जातम्। एषः न केवलं भारतीयैः अपि तु विदेशीयैः अपि स्मर्यते। अयं कविश्रेष्ठं कदा, कुत्र व अजायत इति निश्चयेन वक्तुं न शक्नुमः।
अस्ति उज्जयिन्यां विक्रमो नाम भूपतिः। तस्य सभायाम् कालिदासो नाम कविः बभूव। कालिदासः कविषु श्रेष्ठतमः। 'उपमा कालिदासस्य' इति प्रख्याता लोकोक्तिः लोकेषु। कालिदासेन द्वे महाकाव्ये, द्वे खण्डकाव्ये त्रीणि च रुचिराणि नाटकानि इति सप्तग्रंथाः लिखिताः। रघुवंशम्, कुमारसंभवम्, मेघदूतम्, ऋतुसंहारम्, मालविकाग्निमित्रम्, विक्रमोर्वशीयम्, अभिज्ञानशाकुंतलम् इति ते सप्त ग्रंथाः।
कालिदासः स्वपत्न्याः 'अस्ति कश्चिद् वाग्विशेषः' इति वाक्यस्य प्रत्येकं पदम् अधिकृत्य त्रीणि काव्यानि - 'अस्ति' पदेन 'अस्त्युत्तरस्यां दिशी देवतात्मा' इति कुमारसम्भवं महाकाव्यम् 'कश्चिद' - 'पदेन' 'कश्चित्कान्ता' - 'विरहगुरणा' इति मेघदूतं खण्डकाव्यम् वग्विशेषपदस्य 'वाग्' भागं गृहित्वा 'वागर्थाविव संपृक्तौ......' इति रघुवंश महाकाव्यं च आरब्धवान्।
कालिदासे अद्भुता कल्पनाशक्तिः सर्वतोमुखी प्रतिभा, उत्कृष्टं नाटकनिर्माणकौशलम् आसीत्। विद्वांसः कालिदासम् भारतस्य शेक्सपियरं कथयन्ति।
अभिज्ञानशाकुन्तलं नाटकं तु संस्कृत साहित्ये शिरोमणिपदम् अलभत। अभिज्ञान

शाकुन्तलं नाटकं तु सम्पूर्ण संस्कृतसाहित्ये सर्वोत्तमा रचना स्वीकृता अस्ति| ‘काव्येषु नाटकम् रम्यं तत्र रम्या शकुंतला’ इति पंडिता: आमनन्ति| गटे नाम जर्मनपंडित: शाकुंतलम् पठित्वा आनंदेन अनृत्यत्| कालिदासस्य साहित्ये भारतीय संस्कृत्या: दर्शनं भवति| तस्य उपमाचातुर्यम् रसिकानाम् चेतो हरति|

रघुवंशमहाकाव्यस्य निम्नांकितस्य श्लोकस्य विच्छित्तिविशेषमेवावलोक्य समीक्षका: कालिदासम् दीपशिखाकालिदास्य विरुदा विभूषितवन्त: | स च श्लोको वर्त्तते –

सञ्चारिणी दीपशिखेव रात्रौ चं यं व्यतीयाय पतिवरा सा|
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपाल: ||

कालिदासस्योपमानां क्षेत्रमतीव विस्तृतम वर्त्तते| तस्य काव्येषु-वैदिक्य:, धर्मशास्त्रीया:, दर्शनशास्त्रया:, समाजिक्य:, प्रकृतिविषयिण्य:, अतिप्राकृतविषयिण्य:, नदी पर्वत निर्झर पादप विषयीण्यश्चोपमा: समुपलभ्यन्ते | कालिदासस्य काव्येषु हत्पक्षस्य प्राधान्यमस्ति | कवि: मानवचरित्रस्य परिवर्तनशीलवृत्ती: अवगन्तुमभिव्यञ्जयितुञ्च पूर्णत: समर्थोऽस्ति | चरित्रचित्रणेऽपि कवे: कुशलता स्पृहणीयास्ति | अस्य सर्वाणि पात्राणि भारतीयताया: भव्यमूर्त्तय: | एतेषु काव्येषु भारतीयसमाजस्य सत्यरूपं नाटकेषु - चाभिनेयता लभ्यते | कालिदास: श्रृंगारस्य कविरस्ति | एतस्य कवे: श्रृंगार: उदात्तमेऽकलुषितश्च वर्तते | तपोरताया: उभाया: यादृशमनिन्द्यसौन्दर्यस्य मोहकं वर्णनमनेन कविना कृतम् तत्तु विश्वसाहित्ये दुर्लभमस्ति|

कालिदासशब्दलाघवेऽपि विशिष्यते | स्वल्शब्दैविपुलार्थमव्यज्जयितुं क्षमोऽसौ अर्थगौरवे स्ववैशिष्टयं सूचयति | ऋषिणागिरसा विहिताया पार्वतीपरिणयचर्चाया: प्रसंगे तत्रोपस्थिताया: पार्वत्या दशावर्णने कविना भारतीय कन्याया: आदर्श रूपमभिव्यक्तमस्ति शब्देष्वल्पष्वेव-

एवं वादिनी देवर्षो पार्श्वे पितुरधोमुखी|
लिला कमल पत्राणि गणयामास पार्वती ||

पार्वत्या: सहजलज्जाया: अन्तर्गत प्रेम्ण: आनन्दातिरेकस्य गोपनचेष्टायाश्चै तेषां सर्वेषामेव भावानां मोहिकाभिव्यक्तिर्विदिता वर्तते पद्देऽस्मिन्नेकस्मिन् | कालिदासस्य काव्यानाम् भावपक्षोऽपि समृध्दो वर्तते | महाकविनानेन क्विचित्

अपि क्लिष्टा कृत्रिमा वा भाषा न प्रयुक्तास्ति।
कालिदासेन स्वकाव्येषु माधुर्यप्रसादगुणयो: वैदर्भीपाग्चालीरीत्योश्च प्रयोगो विदितोऽस्ति। कालिदासस्य प्रियं माधुर्यगुणं रुचिरा तु वैदर्भी रितिरेवास्ति।
प्रसिध्दैषोक्ति: -
'वैदर्भीरीतिसन्दर्भे कालिदासो विशिष्यते।'
कालिदासेनालंकाराणमपि रमणीय: प्रयोगो विहितोऽस्ति। अस्य सालंकृता वाणी स्फुटचन्द्रतारिका विभावर्ये व मनोज्ञा वर्तते। अलकाराणां सहजा: प्रयोगा: सन्ति। उपमा, अनुप्रासोत्प्रेक्षा-दृष्टान्त, अर्थान्तरन्यादि-नाम् अलंकारैव कविनैषा स्व कविताकामिनी सम्यगलंकृतास्ति। कवेस्तु वाक्यानि सूक्तिभूतानि सहृदयांना कष्ठाधिष्ठितानि विराजन्ते। एवमस्य कवे: काव्यं देवभारत्या: श्रृंगारमेव। अस्य कवे: माधुर्यस्य मधुरो निवेश:, अर्थसौष्ठवं, सर्वे गुणा: संहता समृध्दाश्च वर्तन्ते।
गोवर्धनाचार्यस्य शब्देशु कालिदासस्य काव्य मम्मटाचार्येण निर्दिदष्टस्य काव्य प्रयोजनस्य – 'कान्तासम्मिततयोपदेशयुजे'
साकूतमधुरकोमलविलासिनीकण्ठकूजितप्राये।
शिक्षासमयेऽपि मुदे रतिलिला कालिदासोक्ति:॥
सत्यम् असौ कालिदास: कविताकामिन्या: विलास एवास्ति। महाकवि: कालिदास: न केवल भारतस्य प्रत्युत विश्वस्य श्रेष्ठ: कवि: अस्ति। अयं संस्कृत साहित्ये लोकोत्तर: कवि: इति न कोऽपि संदेह:।

***सौ. मेघा देशपांडे***
*९८१९४२५९७९, ९३७२२२२८९९*
*meghadeshpande29@gmail.com*
*संस्कृत M. A.*

श्वेता जोशी

# कालिदासस्य गर्वहरणम्।

ज्ञानप्राप्त्यनन्तरं कालिदासेन ज्ञातं यत् सोऽतीव महान् ज्ञानी अभवत्।
एकदा प्रवासे सः पिपासार्तोऽभवत्। तेन दृष्टं समीप एका वृद्धा स्त्री कूप एव जलमपूरयत्।
कालिदासोऽवदत्, "मातः! मह्यं जलं दास्यसि तर्हि त्वं बहु पुण्यं प्राप्स्यसि।"
वृद्धा स्त्री प्रत्युत्तरत्, "वत्स! अहं त्वां न जानामि। कृपया स्वपरिचयं देहि। ततो एव अहं तुभ्यं जलं दास्यामि।"
तदा कालिदासेन स्वपरिचयं दातुमारम्भं कृतम्।
सोऽवदत्," अहं पथिकोऽस्मि।" वृद्धा स्त्री अवदत्, "पथिकौ तु केवलं द्वावेव स्तः - एकः चन्द्रः अपरः च सूर्यः ; यौ अहर्निशं चलितौ एव स्तः।"
कालिदासोऽवदत्, "अहमतिथिः अस्मि। किं जलं प्राप्स्यामि?" वृद्धा अवदत्, "अरे! अतिथी तु केवलं द्वे स्तः - एकं धनम् अपरं च यौवनं; येऽपक्रमतः। सत्यं वद, कोऽसि त्वम्?"
कालिदासोऽवदत्,"अहं सहनशीलोऽस्मि। अधुना तु जलं प्राप्स्यामि?" वृद्धा स्त्री अवदत्, "अरे! सहनशीलौ तु केवलं द्वौ स्तः - एका धरा अपरः च वृक्षः। धरा पुण्यवतां पापीनां जनानां भारं वहति तथा वृक्षः पाषाणखण्डेन मारयित्वापि मधुरं फलमेव यच्छति।"
कालिदासरिदानीं हताशोऽभवत्।
सोऽवदत्, "अहं स्तब्धोऽस्मि।" वृद्धा स्त्री अवदत्, "न , त्वं स्तब्धः कथं भवसि? स्तब्धौ तु केवलं द्वौ स्तः - एकः नखः अपराः च केशाः; यौ कतिपयपि कर्ततः तर्हि पुनः वर्धेत एव।"
कालिदासोऽधुनाग्रस्तोऽभवत् अवदत् च, "अहं मूर्खोऽस्मि।" वृद्धा अवदत्, "मूर्खौ तु केवलं द्वौ स्तः - एकः राजा यस्य योग्यता नास्ति तर्हि सः सर्वेषु राज्यं करोति तथा

अपरो सभापण्डितो यः राजानं विनोदयितुमयोग्यमपि सत्य-सिद्धं कर्तुं प्रयतते।"
कालिदासोऽधुना किमपि वक्तुं नैच्छत्। सः तस्याः वृद्धायाः चरणयोः स्वमस्तकं स्थित्वा जलार्थं प्रार्थयत।
ततो वृद्धा स्त्री अवदत्, "उत्तिष्ठ वत्स!" ध्वनिमिमं श्रुत्वा कालिदासेन उपरि दृष्टं तदा तस्याः वृद्धायाः स्थाने साक्षात्सरस्वतीदेव्यतिष्ठत्। कालिदासो नतमस्तकोऽभवत्।
सरस्वतीदेवी कालिदासमवदत्, "शिक्षणेन ज्ञानं लभ्यते, नाहङ्कारः। शिक्षणबलेन प्राप्तसम्मानप्रतिष्ठ एव त्वं सर्वस्वमवागच्छः। तेन त्वमहङ्कारी अभवः। तदा तव नयनोद्धाटनमावश्यकमभवत्।"
ततो कालिदासेन स्वप्रमादः ज्ञातः। तेन जलं पीत्वा अग्रिमप्रवासार्थं प्रस्थितम्।
महाकवेः कालिदासस्य अस्याः लघुदन्तकथामाध्यमेन वयं जानीमः यत् स्वविद्वत्तायां कदापि गर्वः न कुर्यात्।

***श्वेता जोशी***
*नवपनवेलनगरम्।*
*shwetayj02@gmail.com*
*विज्ञान शाखेची पदवीधर. महर्षी व्यास विद्या प्रतिष्ठानचा अध्यापन वर्ग पूर्ण. संस्कृत शिक्षिका. सध्या एम्. ए. संस्कृत करीत आहे. संक्षिप्त श्री गुरूचरित्र सार- मराठीतून लिहून ते पुस्तकरूपाने प्रसिद्ध. सध्या संस्कृतमधून श्री, गुरूचरित्र लेखनाचे काम सुरू.*

श्वेता जोशी

# मेघदूतम्।

महाकविकालिदासरचितम् ।
विख्यातदूतकाव्यं मेघदूतम् ॥
यक्षकथैका कथिताऽऽस्मिन् ।
कुबेरोऽवसदलकापुर्यां यस्मिन् ॥
यक्षस्य किञ्चित्प्रमादात् ।
क्रोधेन तं कुबेरोऽशपत् ॥
निष्कासितं तञ्चालकापुर्याः ।
रामगिरिपर्वते सोऽवसत्ततः ॥
आसीत् वर्षाऋतुसमयः ।
स्वप्रियामस्मरत् यक्षः ॥
अतो प्रेषितस्वसन्देशस्तेन ।
स्वकामिन्यै मेघमित्रमाध्यमेन ॥
अस्तुत्तरमेघखण्डे प्रसिद्धम् ।
विरहाकुलयक्षप्रेषितसन्देशवर्णनम् ॥
तथा पूर्वमेघखण्डे मेघप्रवासवर्णनम् ।
रामगिरितोऽलकापुरीपर्यन्तम् ॥

***श्वेता जोशी, (नवीन पनवेल)***
*shwetayj02@gmail.com*
*विज्ञान शाखेची पदवीधर. महर्षी व्यास विद्या प्रतिष्ठानचा अध्यापन वर्ग पूर्ण. संस्कृत शिक्षिका. सध्या एम्. ए. संस्कृत करीत आहे. संक्षिप्त श्री गुरूचरित्र सार- मराठीतून लिहून ते पुस्तकरूपाने प्रसिद्ध. सध्या संस्कृतमधून श्री, गुरूचरित्र लेखनाचे काम सुरू.*



सौ. रश्मि जोशी

# महाकविः कालिदासः

पुराणेषु मधुरसं पित्वा अलौकिकां रचनाम् अकरोत्।
नैकानि नाटकानि लिखित्वा जनान् प्रामोदयत्।
अपूर्वानाम् उपमाधिष्ठितानां काव्यानां रचयितारम्।
स्मरामि संस्कृतकविशिरोमणिं महाकविं कालिदासम् ॥

***सौ. रश्मि विश्वास जोशी***

*चिपळूण*

*गृहिणी. संस्कृत भाषेची आवड त्यामुळे संस्कृत भारतीच्या पत्राद्वारे संस्कृत शिक्षणाच्या परीक्षा दिल्या. आठ वर्षे Private Tuition Classes मध्ये आठवी ते दहावीच्या मुलांना, इंग्रजी माध्यमातील मुलांना संस्कृत विषयाचे मार्गदर्शन करण्याची संधी मिळाली आणि या संधीचा फायदा घेत लहान मुलांमध्ये संस्कृतची आवड निर्माण करण्याचा प्रयत्न केला.*